असत्यवान्तरप्रकरणे पूर्वेद्युरन्वाधानादिः उत्तरेद्युः समापनमिति प्रत्यक्षवचनेन त्र्यहकालिकत्वबोधकेन दीर्घकालसाध्यसौमिकविध्यन्तातिदेशबाधेन उक्तदोषाभावात्। चतुर्थ्या तद्धितेन मन्त्रवर्णेन वा यत्र न देवताव्यक्तिः तत्र सौमिकातिदेशः नोत्पत्तौ देवताव्यक्त्यभावमात्रेण, उपांशुयाजे तत्प्रसङ्गात्। तत्र मन्त्रवर्णेन तद्व्यक्तिवदिहापि "समिधो अग्न आज्यस्य"त्यादिमन्त्रवर्णाद्देवताव्यक्तिरिति न दोषः।

अवश्यं चावान्तरप्रकरणं वाच्यम्। अन्यथा दर्शपूर्णमासप्रकरणे क्रमेण सामिधेनी-निवित्काम्यसामिधेनीकल्पोपवीतेष्वाम्नातेष्ववान्तरप्रकरणात्सामिधेन्यङ्गमुपवीतमित्याशङ्क्य, निवि-द्भिर्विच्छेदान्न सामिधेनीनामवान्तरप्रकरणमिति दर्शपूर्णमासाङ्गत्वसिद्धिस्तत्प्रकरणादिति सिद्धान्तः शेषलक्षणे कृतो विरुध्येत। सन्निधाननिवृत्त्यर्थं निविद्भिर्विच्छेदकीर्तनं सार्थकमिति चेन्न; सत्यपि सन्निधाने प्रबलप्रकरणाद्दर्शपूर्णमासाङ्गत्वसिद्धेः। सति त्ववान्तरप्रकरणे महाप्रकरणापेक्षया प्रबलेन तेन सामिधेन्यङ्गत्वाशङ्कायां विच्छेदकीर्तनं सफलमपि। तत्सिद्धमवान्तरप्रकरणं नाम प्रकरणमिति।

क्रमः समानदेशत्वम्। तद्द्विविधम् पाठकृतमर्थकृतञ्चेति। आद्यमपि द्विविधम् —सन्निध्याम्नानयथासङ्ख्याम्नानभेदात्। तत्राद्यस्योदाहरणं सान्नाय्याङ्गं शुंधध्वमिति मन्त्रः। द्वितीयस्योपांशुयाजाङ्गं दब्धिमन्त्रः। तृतीयस्याग्नीषोमीयपश्वङ्गमुपाकरणादयः पशुधर्माः।

यौगिकः शब्दः समाख्या। सा द्विविधा लौकिकी वैदिकी चेति। तत्राद्या हौत्राध्वर्य-वौद्गात्रादिरूपा स्तोत्रहोमादीनां कर्मणां व्यवस्थया अध्वर्य्वादिकर्तृकत्वबोधिका। द्वितीया तु होतुश्चमसो ब्रह्मणश्चमस इत्याद्या होत्रादीनां तत्तच्चमसभक्षणं बोधयति।

तदेवं व्याख्यातानि श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यारूपाणि षड्विनियोजक-प्रमाणानीति।

अत्र गुरुराह — अस्ति सप्तममपि विनियोजकप्रमाणं, चातुर्थिकप्रथमनयनिरूपित-मुपादान नाम। तच्चावश्यमभ्युपगन्तव्यम्, सर्वेषामङ्गानां ग्राहकैदमर्थ्ये स्वस्वप्रकरणाधीतसमस्त-वाक्याभिहितपदार्थैः प्रयाजप्रोक्षणादिभिरन्वितं प्रधानापूर्वमधिकारवाक्यस्थो विधिप्रत्ययः प्रयोजन-प्रयोजनिभावेनाभिदधातीत्येवंरूपेण ग्राहकग्रहणप्रमाणेन सिद्धे तद्ग्राहकैदमर्थ्यं प्रयाजप्रोक्षणादीनां, न समानपदोपात्तयागादिलक्षणकरणावरुद्धेऽपूर्वे कारणत्वमादाय पर्यवस्यति, किन्तु ग्राहकीयकरणै-दमर्थ्यमादायेति तस्मिन्नारादुपकारकाणामुपकार[1]कमवेक्षते, आरादुपकारकाणि प्रयोजनमपेक्षन्ते इति परस्पराकाङ्क्षालक्षणप्रकरणप्रमाणेन सिद्धेऽपि सन्निपातिनां व्रीह्यादिद्वारैदमर्थ्ये श्रुत्यादिभिस्सिद्धेऽपि

1 ... मुपकारमपेक्षते।

तेषां शान्तप्रयोजनाकाङ्क्षाणां करणैदमर्थ्यस्य, प्रोक्षणाद्यन्वितनियोगाभिधानं प्रोक्षणादेः करणोपकारकत्वं विना न पर्यवस्यतीत्यभिधानापर्यवसानलक्षणोपादानप्रमाणं विना प्रमाणान्तरेणासिद्धेरिति।

तदेतन्मीमांसाश्रवणप्रक्षुब्धहृदयस्य श्रद्धामात्रप्रसूतम्। प्रकरणादेव सन्निपातिषु करणैदमर्थ्यावगतिसंभवात्। तत्र परस्पराकांक्षाभावेऽपि लाघवात्प्रधानाकांक्षामात्रस्य प्रकरणत्वात्तस्य च तत्रापि सत्त्वात्परस्पराकांक्षाप्यस्त्येव। प्रोक्षणादेः श्रुत्यादिभिः व्रीह्यादिद्वारसम्बन्धेऽधिगतेऽपि प्रयोजनाकांक्षाया अशान्तेः। इयांस्तु विशेषः सन्निपात्यारादुपकारकयोः, श्रुत्यादिसहितप्रकरणेन विनियुज्यते सन्निपात्यङ्गं, केवलेन तेनारादुपकारकमिति। कथमिदानीं प्रकरणाधीतस्य पर्णमयत्वादेः क्रत्वङ्गत्वं? प्रकरणाध्ययनाविशेषाद्धिरण्यभरणाधानाध्ययनादेः क्रत्वङ्गत्वं कुतो न भवतीति? अव्यभिचरितलिङ्गसद्भावासद्भावाभ्यामिति ब्रूमः। जुहूरूपादव्यभिचरिताल्लिङ्गात्क्रतावुपस्थिते वाक्यात्पर्णमयत्वादेः क्रत्वङ्गत्वसिद्धेः। नैवं हिरण्यभरणादौ तल्लिङ्गमस्तीति। प्रधानत्वकार्यत्वधर्माक्रान्तापूर्ववाची विधिप्रत्यय इति जल्पतो गुरोर्मते प्रयाजादेः क्रत्वङ्गत्वं न सिद्ध्यति। ग्राहकग्रहणात्सिद्ध्यतीति चेन्न, समिधो यजतीति प्रत्ययश्रुत्या प्रधानापूर्ववाचिन्या विरोधेन ग्राहकग्रहणस्यैवाभावात्। विरोधश्च समिदादियागस्य ग्राहकग्रहणे अन्याक्रान्तयागविषयकस्य समिदाद्यपूर्वस्याप्राधान्यापत्त्या प्रधानवाचिप्रत्ययश्रुतेर्लक्षणापत्तेः। अत एव "युवं हि स्थः स्वर्पती" "एते असृग्रमिन्दवः" इति प्रतिपद्द्वय प्रकरणाधीतमप्येकयजमानकज्योतिष्टोमग्राहको न गृह्णाति, "द्वयोर्यजमानयोः" 'बहुभ्यो यजमानेभ्यः" इति श्रुतिविरोधात्। ततो द्विबहुयजमानकेषु कुलायाहीनादिषूत्कृष्टव्यं तदिति शेषलक्षणे स्थितमिति।

यच्च गुरोर्मतं 'अरुणया क्रीणाति' इत्याद्यनेकवाक्यप्रतीतोऽपि क्रयो भिद्यते, गुणकर्मणां कार्यभेदादेव भेदात्क्रयस्य च सोमलतायां स्वत्वोत्पत्तिलक्षणकार्याभेदात्। उत्पन्ने स्वत्वे पुनः स्वत्वोत्पत्तेरभावात्। नच वसन्तादिवाक्यप्रतीतापि क्रिया न भिद्यते। गुणकर्मणामाधानानां, "तस्य द्वादशशतं दक्षिणा" "प्राकाशावध्वर्यवे ददाति" इति प्रतीतयोः प्राकृतवैकृतदानयोश्च भेदबाधलक्षणसिद्धो भेदो न स्यात्, आहवनीयोत्पत्तिकार्यस्यर्त्विगानतिलक्षणकार्यस्य चाभेदादिति शङ्क्यम्, आदधीतेत्यात्मनेपदबलात ब्राह्मणक्षत्रियवैश्यसबंध्याहवनीयलक्षणकार्यभेदात् गुणकर्मणामप्याधानानां भेदसिद्धेः ऋत्विगध्वर्य्वानतिलक्षणकार्यभेदाद्गुणकर्मणोरपि दानयोर्भेदसिद्धेः। स एकः क्रयः कदाचित्केनचिद्वाक्येन विधीयत इति विधानविकल्प इति। तदपि तुच्छम्, प्रयाजस्य भेदानापत्तेः। यद्यभ्यासाद्भेदः तर्हि क्रीणात्यभ्यासात्क्रयस्यापि गुणकर्मणो भेद इति तुल्यम्। नहि प्रमाणेनापतन भेदः कार्यभेदाभावादपैतीति शाब्दैरभ्युपगन्तुं युक्तम्। यच्च विधाने विकल्प इति नैतद्वस्तुनि विकल्पायोगादिति।

क्रमलक्षणमारंभणीयं नवेति संशयः। तदर्थमिदं चिन्तनीयं किं क्रमश्चोदनालक्षणो भवति? नेति। तदर्थश्च चोदनालक्षणत्वं किं विधेयत्वप्रयुक्तं? अन्यप्रयुक्तमपीति। अयश्च संशयः साधारणो विवरणनिबंधनयोस्सिद्धान्तश्च। पूर्वपक्षप्रकारस्तु भिद्यते। तत्र क्रमस्तावदक्रियारूपत्वान्न स्वरूपेण विधेयः। नापि विधेयविशेषणतया, अविधेयसङ्घातविशेषणतया विधेयैकैकपदार्थविशेषणत्वाभावात्। ततो यस्य संघातस्य विशेषणं क्रमः स न विधेयः, (यो) विधेयः पदार्थः तस्य न विशेषणं (क्रमः)। ततश्च 'वषट्कर्तुः प्रथमभक्षः' इत्यादिप्रमाणकस्तृतीये विचारितो यः क्रमः, यश्च 'अध्वर्युर्गृहपतिं दीक्षयित्वा' इत्यादिप्रमाणकः पञ्चमे विचारणीयः उभावपि उक्तरीत्या न विधेयौ। अतो न चोदनालक्षणता विधेयतातन्त्रत्वाच्चोदनालक्षणतायाः। अतश्च न विचारमर्हति क्रमः। चोदनालक्षणस्यैव विचारप्रतिज्ञानादिति विवरणपूर्वपक्षाभिप्रायः।

निबंधनेतु; प्रथमादिशब्दाभिहितत्वेन तार्तीयक्रमस्य ग्राहकगृहीतस्य विधिव्यापारगृहीतत्वरूपविषयत्वादस्ति विधेयत्वम्। न पाञ्चमिकस्य अनभिहितत्वात्। नचाध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयतीत्यादित्वाश्रुत्या अभिधानं तुल्यमिति वाच्यम्, "व्यादाय स्वपिती"त्यादौ पौर्वापर्यरूपक्रमार्थव्यभिचारेण समानकर्तृकत्वमात्रस्य तदर्थत्वात्। तथा चानभिहित क्रम न ग्राहको गृह्णाति। अग्राहकगृहीतं नापूर्वाङ्ग अतदङ्गस्य विधिव्यापाररूपोपादानाविषयस्य न विधेयत्वम्। अविधेयश्च न चोदनालक्षणो न च विचारमर्हतीति।

सिद्धान्तस्तु, उक्तरीत्याविधेय एव क्रमः। न च तावता नादरणीयः, अपूर्वभेदो ह्यनुष्ठानविशेषसाध्यतया तमपेक्षते, स च पाठादिना प्रतीतो न परित्यक्तः। नचैवमप्यविधेयस्याचोदनालक्षणतया न विचारार्हत्वमिति वाच्यम्; यो विधेयः अनुष्ठानविशेषश्च क्रमविशेषसाध्यतया तमपेक्षते चोदनाचोदितपदार्थानुष्ठानविशेषोपलक्षणतया प्राजापत्ययागोपलक्षणसप्तदशत्वसंख्यावच्चोदनालक्षणत्वात्। कस्यचिच्चोदनाचोदितत्वेन चोदनालक्षणत्वं, यथा क्रियायाः। कस्यचिच्चोदनाचोदित क्रियाविशेषणत्वेन, यथा द्रव्यगुणादेः। कस्यचिच्चोदनाचोदितक्रियोपलक्षणत्वेन, यथा सप्तदशत्वादिसंख्यायाः। सप्तदशप्राजापत्यानित्यत्र हि प्रजापतिर्देवतास्येति प्रजापतिदेवतासम्बन्धविशिष्टे पशौ तद्धितान्तार्थे तद्धितान्तात्प्रातिपदिकादुत्पन्न बहुवचनं बहुत्वसंख्यामवच्छेदकतया बोधयति। तच्च विशिष्टेऽन्वितं विशेषणे सम्बन्धेऽप्यन्वेति। ते चेत्सम्बन्धा बहवः सा च सम्बन्धगतबहुत्वसंख्या त्रित्वादिरूपतया नीयत इति किंरूपेत्यपेक्षायां सप्तदशेति पदं सप्तदशत्वरूपेति बोधयतीति निर्विवादम्। तत्र श्रुतसम्बन्धरूपानुबन्धानां सप्तदशतया नियोगा अपि सप्तदशेति निबन्धनकारः। श्रुतैः सप्तदशभिः सम्बन्धैरनुमितयागरूपक्रिया एव सप्तदश स्वतः पुरुषव्यापारसाध्यत्वानुबन्धमनुबन्यत्वं चाग्नीषोमदेवताकारकवदनुमितसप्तदशयागानुवृत्तं लाघवादेकमेवेति कल्प्यते।

ततश्चानुबन्धभेदाभावान्न नियोगभेद इति विवरणकारः। उभयथापि सप्तदशत्वसंख्या सम्बन्धगता तद्द्वारा तदनुमितयागगता च सा च न विधेया।

अथ यथा पशुना यजेतेत्यत्रैकत्वविशिष्टकर्मविधानं, यथा वा सोमेन यजेतेत्यत्र सोमद्रव्यविशिष्टकर्मविधानं, एवं सप्तदशत्वसंख्याविशिष्टकर्मविधानमिति विधेयविशेषणमेवेति चेन्न; विकल्पासहत्वात्। किं सप्तदशत्वसंख्या कर्मणि कारकतया विधीयते? उत होमाश्रितदधिवदाश्रिततयेति। आद्ये पशुना यजेतेति यागशेषत्वेन प्रतिपादितमेकत्वं साक्षात्त जनयितुमसमर्थं पार्ष्ठिकान्वयन्यायेन तत्कारकत्वावच्छेदकतया यथा कारकगतं, तथेयमपि कर्माङ्गपशुगता स्यात्। तच्चानिष्टं, कर्मगतेति ह्युक्तम्। द्वितीये तु, पूर्वमाश्रयप्राप्तिर्वक्तव्या होमप्राप्तिवत्। न च सास्ति। तत्सिद्धं कारकतयाऽऽश्रिततया वा न विधानमिति। अतः सप्तदशत्वसंख्यायोग्यपृथक्त्वाश्रयेषु कर्मसु विहितेष्वर्थप्राप्तानुवादः सप्तदशेति। अत इयं संख्या न न्यूनं न चाधिकमिति पूर्वोत्तरव्यावृत्ततया कर्म ज्ञापयन्ती तदुपलक्षणम्। तथा क्रमोऽपि चोदनाचोदितयोगविशेषमुपलक्षयन् चोदनालक्षणो भवति विचारञ्चार्हतीति।

इदं क्रमाविधेयत्वं भट्टमतानुसारिणो नाभ्युपगच्छन्ति, युक्तिविरोधात् सूत्रतद्भाष्यविरोधाच्च। तत्र युक्तिविरोधस्तावत् स्वरूपेणाविधेयस्यापि क्रमस्य कालादिवद्विधेयप्रयोगविशेषणत्वेन विधेयत्वं संभवत्येव। अस्मिन्काले प्रयोगः कर्तव्य इति हि कालो विधेयप्रयोगविशेषणम्। एवमनेन क्रमेण प्रयोगः कर्तव्य इति क्रमोऽपि। यदुक्तं, क्रमस्संघातनिष्ठ इति तदसत् संघातस्यैकत्वात् क्रमस्यानेकनिष्ठत्वात्। किन्निष्ठस्तर्हि क्रम इति चेत् पदार्थनिष्ठ इति ब्रूमः। तत्र यदुक्तं एकैकपदार्थस्य क्रमो न संभवतीति तत्रापि ब्रूमः द्वित्वादिवत्पदार्थद्वयाश्रय इति। अथ वा परत्वप्रतियोगिकं पूर्वत्वं पूर्वत्वप्रतियोगिकं परत्वं वा क्रमः। न पौर्वापर्यं, येनानेकाश्रयापेक्षा स्यात्। न च ह्रस्वत्वप्रतियोगिकदीर्घत्वमनेकपदार्थनिष्ठमिति। तत्सिद्धं विवरणकारोक्तं क्रमाविधेयत्वमसंगतमिति।

यदुक्तं निबन्धनकारेण, अनभिहितस्यापाञ्चमिकक्रमस्याविधेयत्वमिति तदप्यसत्, अर्थाध्याहारमतेनाभिहितत्वेपि पाठादिना उपस्थितस्य प्रयोगविशेषाकांक्षितस्य योग्यस्य च क्रमस्य ग्राहकग्रहणसम्भवात्। अभिधानेप्याकांक्षायोग्यतासन्निधिमत्त्वमेव हि ग्राहकग्रहणे कारणम्। अत एवानभिहितानियोज्यपिण्डपितृयज्ञादावध्याहारेणोपस्थितमाकांक्षितं योग्यं नियोज्यं ग्राहको गृह्णातीति स्थितम्। एवं तावत्क्रमस्य क्त्वाप्रत्ययानभिधेयत्वमङ्गीकृत्योक्तम्। तदभिधेयत्वञ्च सम्भवति 'समानकर्तृकयोः पूर्वकाले' इति स्मृतेः, भुक्त्वा व्रजतीत्यादिप्रयोगाच्च। न च भोजनव्रजनयोः पौर्वापर्यप्रतीतिः पाठादेवेत्यन्यथासिद्धत्वं शङ्कनीयम्, व्रजति भुक्त्वेत्यपि प्रयोगात्। मुखं व्यादाय-

स्वपितीत्यत्रापि सुप्त्वा मुखं व्यादत्त इत्येवंप्रकारेणार्थव्यभिचारः परिहरणीयः। तस्सिद्धं क्रमाविधेयत्वं युक्तिविरुद्धमिति। श्रुतिलक्षणमानुपूर्व्यं, विधत्ते क्रममिति सूत्रं भाष्यवाक्यञ्च न सङ्गच्छेयाताम्।

एवं तावत्प्रयोगविधिविधेयत्वं क्रमस्य निरूपितम्। 'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयती'त्यत्रान्तरविधिविधेयत्वञ्च संभवति पारिशेष्यात्। न तावदत्र दीक्षाविधिः, चोदकप्राप्तेः। नाप्यध्वर्युप्रतिप्रस्थात्रादेः दीक्षाकर्तृत्वनियमविधिः, तत्र सर्वेषां स्वयमेवानतत्वेन प्रार्थनाख्यवरणस्याध्वर्य्वादिपदप्रवृत्तिनिमित्तस्य लुप्तत्वेन मुख्याध्वर्य्वादेरभावात्। वरणमेव हि प्रवृत्तिनिमित्तं गुरुमते। अथैवमप्यध्वर्युकार्यकर्ताऽध्वर्युर्होतृकार्यकर्ता होतेत्येवं तत्कार्यकरणगुणयोगादध्वर्य्वादयो गौणास्सम्भवन्तीत्यध्वर्युप्रतिप्रस्थात्रादेर्गौणस्य दीक्षाकर्तृत्वनियमविधिरिति चेन्न, दीक्षायाः पूर्वं कस्यापि कार्यस्य केनाप्यकरणात्। भट्टमतेप्यहमध्वर्युः रहंहोतेत्यादिसंकल्पस्य सत्रासत्रानुगतस्याध्वर्य्वादिपदप्रवृत्तिनिमित्तत्वेनाध्वर्य्वादयो मुख्या एव सत्रेपि।

"ज्योतिष्टोमेन स्वर्गकामो यजेत" त्यादौ स्वर्गकामादिशब्दो न कर्तृपरः, व्यापारवाचकाख्यातेनैवार्थाद्व्यापारवतः कर्तुः प्रतीतेः। अतः साधनपरः? आहोस्वित्साध्यपरः इति संशयः। तत्र यजेतेत्ययमर्थो यागं भावयेदिति, समानपदोपात्तत्वाद्यागस्य। अतः स्वर्गशब्दः सुखसाधनचन्दनखण्डादिपरः। साध्यसिद्ध्यर्थं साधनस्यापि लक्षितत्वेनार्थसिद्धसाधनकामनानुवादी कामांशः। ततश्चन्दनखण्डेन यागं भावयेदित्युक्तं भवति। अथ यागादेः क्लेशात्मकत्वेन फलान्तरस्याप्यभावेनाननुष्ठानलक्षणाप्रामाण्यं स्यादिति चेन्न, निवृत्तिपरत्वात्कर्मकाण्डस्य ब्रह्मकाण्ड इव ज्योतिष्टोमेन स्वर्गकामो यजेत, न बाह्यव्यापारं कुर्यादित्यर्थः। एतेन सर्वाण्यपि वाक्यानि व्याख्यातानि।

कृतः पूर्वपक्षः। सिद्धान्तस्तु— प्रेरणार्थकविध्यवरुद्धार्थभावना समानपादोपात्तमपि धात्वर्थं क्लेशात्मकत्वेन परित्यज्य भिन्नपदोपात्तं कामनाविशेषणमपि स्वर्गं भाव्यत्वेन स्वीकरोति, पारिशेष्यात् भावार्थं करणत्वेन, यागेन स्वर्गं भावयेदिति। श्रुतहान्यश्रुतकल्पनाप्रसंगान्निवृत्तिपरत्वपक्षः सुतरामुपेक्षणीय इति। एवं भट्टमतानुसारेण षष्ठाद्यनयः।

अन्ये तु मन्यन्ते स्वर्गकामादिशब्दो न भाव्यपरः, विधिप्रत्ययेनैव भावनोपसर्जनकस्य भाव्यपूर्वस्य प्रसिद्धेः। तस्मात्कृत्युद्देश्यमपूर्वं कृतिद्वारा कर्तारमपेक्षत इत्यपेक्षितकर्तृपर इति पूर्वपक्षः।

प्रत्ययार्थः कृत्युद्देश्यमपूर्वमादौ स्वस्मिन्माद्ध्र्येन बोद्धारं नियोज्यमपेक्षते, ततः स्वविषययागादौ माद्ध्र्यबोद्धारमधिकारिणं, ततस्तदनुष्ठातारं कर्तारं ततः प्रथमापेक्षितनियोज्यपर इति सिद्धान्तः।

'नमोस्तु धर्मराजाय स मे प्रीतो भवेदिह' इत्युक्त्वा—

यावदस्थि मनुष्याणां गङ्गातोयेषु तिष्ठति।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते॥

इति मन्त्रेणानवलोक्य पृष्ठतो विसृजेत्। पृथिवीं गच्छान्तरिक्षं गच्छ दिवं गच्छ दिशो गच्छ सुवर्गच्छ सुवर्गच्छ दिशो गच्छ दिवं गच्छान्तरिक्षं गच्छापो वा गच्छ यदि तत्र ते हितमोषधीषु प्रतितिष्ठा शरीरैः। एवं त्रिवारं कृत्वा क्षीरेण करौ पादौ प्रक्षाल्य स्नात्वाचम्य नित्यतिलोदकं पिण्ड-प्रदानानि दद्यात्। नवश्राद्धवत् सञ्चयनाङ्गामश्राद्धं कुर्यात्। तृतीयपञ्चमसप्तमनवमदिनेषु नवश्राद्धं कुर्यात्॥

[1](इमा जीवास्संकुशिको मृत्युस्त्रिष्टुप् आत्मसंरक्षार्थे जपे विनियोगः। इमे जीवाः+प्रतरं दधानाः॥ इम जीवेभ्यस्संकुशिको मृत्युस्त्रिष्टुप्। आत्मसंरक्षार्थे जपे विनियोगः। इमं जीवेभ्यः परिधिं दधामि मैषान्नुगादपरो अर्थमेतं शतं जीवन्तु शरदः पुरूचीरन्तर्मृत्युं दधतां पर्वतेन॥ (सव्यं) सूर्यं चक्षुर्गच्छतु वातमात्मा द्यां च गच्छ पृथिवीं च धर्मणा। अपो वा गच्छ यदि तत्र ते हितमोषधीषु प्रतितिष्ठा शरीरैः इति मन्त्रेण सूर्यमवलोक्य स्नात्वा पर्षदं प्रणम्य अशेषे स्वीकृत्य (प्राचीनावीती) अस्मत्पितुः गोत्रस्य शर्मणः प्रेतस्य प्रेततृप्त्यर्थं उत्तमलोकावाप्त्यर्थं मरणदिना-दारभ्य द्वितीयेहनि अस्थिसंचयनकाले अस्थिनिक्षेपणकाले तिथिवारनक्षत्रलग्नयोगकरणैर्यो दोषस्समजनि तद्दोषपरिहारद्वारा मम पितुः अक्षय्यपुण्यलोकावाप्तिरस्त्विति भवन्तः महान्तः अनुगृह्णन्तु। यजमानस्य पितुः अक्षय्यपुण्यलोकावाप्तिरस्त्विति प्रतिब्रूयुः)॥

इति अस्थिसञ्चयनविधिः॥

## अथ दशाहविधिः

दशमेहनि शिक्यदीपजलकुम्भादीन् मृतदेशादुद्वास्य तद्देशमुल्लिख्य गृहं संशोध्य बीजांकुराणि गृहपक्वान्नगन्धाक्षतपुष्पताम्बूलामलकतण्डुलजीर्णवस्त्रहरिद्राचूर्णतिलदर्भानादाय जलाशय-मेत्य ज्ञातीनां वपनं कारयित्वा पिण्डार्थं तण्डुलं श्रपयित्वा नित्यविधिं कृत्वा ओं ओं अद्य पूर्वोक्तएवंगुणविशिष्टायां पुण्यतिथौ प्राचीनावीती + दशमेहनि कर्तव्यदहनजनितदाहतापतृष्णा-पिपासाक्षुदुपशमनार्थं प्रेताप्यायनार्थं प्रेततृप्त्यर्थं शिलास्नानमृदास्नानवासोदकतिलोदकपिण्डप्रदानानि करिष्य इति संकल्प्य। तिलान् गृहीत्वा आयाहि प्रेत इत्यावाह्य शिलास्नानमृदास्नानवासोदक-

1. अधिकः पाठः।

तिलोदकपिण्डदानानि कृत्वा अनन्तरं अशेषे स्वीकृत्य पितुः गोत्रस्य शर्मणः प्रेतस्य+दशमेहनि मम पितुः अक्षय्यपुण्यलोकावाप्त्यर्थं शरीरशुध्यर्थं दशाहांगवपनं कारयिष्ये इति सकल्प्य वपनाधिकार-योग्यतासिध्यर्थं प्राजापत्यकृच्छ्रप्रत्याम्नायं यत्किंचित् हिरण्यदानं करिष्य इति सकल्प्य हिरण्यगर्भ + प्रयच्छ मे इद प्राजापत्यकृच्छ्रप्रत्याम्नायं यथाशक्ति हिरण्य महाविष्णुप्रीतिं कामयमानस्तुभ्यमह संप्रददे इति ब्राह्मणाय दत्वा एकदर्भं गृहीत्वा शिरसि निधाय ॥

मेरुमन्दरतुल्यानि पापानि विविधानि च ।
केशानाश्रित्य तिष्ठन्ति तस्मात्केशान्वपाम्यहम् ॥

आत्मनः शुद्धिकामो वा मत्पितुः मुक्तिहेतवे ।
वपनं कारयिष्यामि तीरे ब्राह्मणसंनिधौ ॥

अथ ज्ञातयः तिलोदकानि दद्युः दीक्षावस्त्रं विसृज्य अन्यवस्त्रं धृत्वा दक्षिणाभिमुखमुपविश्य सर्वाङ्गं वपन कृत्वा स्नात्वा दीक्षावस्त्रं धृत्वा अशेषे+स्वीकृत्य प्राचीनावीती अस्मत्पितुः गोत्रस्य शर्मणः प्रेतस्य प्रेततृप्त्यर्थं उत्तमलोकावाप्त्यर्थं मरणदिनादारभ्य अद्य दशमेहनि दशाहाङ्गमहाक्षुन्निवारणार्थं प्रभूतबलिवेदिकाराधनबलिप्रदानपिंडप्रदानानि कर्तुं योग्यतासिद्धिमनुगृहाण योग्यतासिद्धिरस्त्विति ब्राह्मणाः प्रतिब्रूयुः । संचयनवत्सर्वं कुर्यात् । अनन्तरं प्रेतपत्नीमांगल्यविसर्जन अनन्तरं लौकिकं कुर्यात् ॥

## अथ शिलाविसर्जनम्

अशेषे + स्वीकृत्य दक्षिणां दत्वा प्राचीनावीती अस्मत्पितुः गोत्रस्य शर्मणः प्रेतस्य + दशमेहनि मम पितुः अक्षय्यपुण्यलोकावाप्त्यर्थं कावेर्यंभसि शिलापात्रोद्वासनं कर्तुं योग्यतासिद्धि-मनुगृहाण । योग्यतासिद्धिरस्त्विति ब्राह्मणाः प्रतिब्रूयुः । ओं ओं अद्यपूर्वोक्त + कावेर्यंभसि शिलापात्रोद्वासनं कर्तुं मुख्यकालो भूत्वा मम अधिकारसंपदस्त्विति भवन्तो ब्रुवन्तु अधिकार-संपदस्त्विति ब्राह्मणाः सव्यं कृत्वा ओं ओं अद्य पूर्वोक्तएवगुणविशिष्टायां पुण्यतिथौ प्राचीनावीती अस्मत्पितुः गोत्रस्य शर्मणः प्रेतस्य + दशमेहनि मम पितुः अक्षय्यपुण्यलोकावाप्त्यर्थं कावेर्यंभसि शिलापात्रोद्वासनं करिष्य इति संकल्प्य तत्काले कृच्छ्राचरणं करिष्ये हिरण्यगर्भगर्भस्थ+प्रयच्छ मे इदं प्राजापत्यकृच्छ्रप्रत्याम्नाय शिलापात्रोद्वासनकाले तिथिवारनक्षत्रयोगकरणैः यो दोषस्समजनि तद्दोषपरिहारार्थं महाविष्णुप्रीतिं कामयमानस्तुभ्यमहं संप्रददे । शिलापात्रोद्वासनकाले गोमूल्यदान करिष्य इति संकल्प्य गोमूल्यदानं कृत्वा दशदानानि कृत्वा सव्यं अशेषे स्वीकृत्य प्राचीनावीती अस्मत्पितुः गोत्रस्य शर्मणः प्रेतस्य प्रेततृप्त्यर्थं + दशमेहनि शिलापात्रोद्वासनकाले तिथिवारनक्षत्र-

योगकरणैर्यो दोषस्समजनि तद्दोषपरिहारद्वारा मम पितुः अक्षय्यपुण्यलोकावाप्तिरस्त्विति भवन्तो महान्त अनुगृह्णन्तु । मध्यशिलामुद्धृत्य ज्ञातिभिस्सह जलाशयं गत्वा तत्तीरे दर्भोपरि शिलां निधाय ज्ञातयः धर्मोदकं दद्युः । अनन्तरं पुत्राः प्राचीनावीती अस्मत्पित्रे गोत्राय शर्मणे प्रेताय प्रेततृप्त्यर्थं+दशमेह्नि ऋणविमोचनार्थं इद ते धर्मोदक उपतिष्ठतु एव त्रिः इति धर्मोदकं कृत्वा शिलापात्रमादाय ॥

यावच्छिला मनुष्याणां गङ्गातोयेषु तिष्ठति ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥

पृथिवीं गच्छान्तरिक्षं गच्छ दिवं गच्छ दिशो गच्छ सुवर्गच्छ सुवर्गच्छ दिवं गच्छ दिशो गच्छान्तरिक्षं गच्छ पृथिवीं गच्छापो गच्छ यदि तत्र ते हितमोषधीषु प्रतितिष्ठा शरीरैः अनेन मन्त्रेण शिलां जले पृष्ठतः विसृजेत् । पिण्डपात्रं वस्त्र च विसृज्य अन्यवस्त्रं धृत्वा आमलककल्केन शिरसि उद्वर्त्य स्नायात् ब्राह्मणेभ्यो दक्षिणां दद्यात् जलपूर्णकलशं तण्डुलोपरि निधाय कलशे वरुणं सपूज्य पुण्याहं वाचयित्वा निवर्तध्वसूक्तपारायणं ब्राह्मणद्वारा कारयिष्य इति सकल्प्य निवर्तध्वसूक्तजपकर्मणि सर्वेभ्यो ब्राह्मणेभ्यो नमः । अथ ब्राह्मणाः निवर्तध्वसूक्तजपं कुर्युः ॥

निवर्तध्वं मानुगातास्मान्सिषक्तरेवतीः ।
अग्नीषोमा पुनर्वसू अस्मे धारयितं रयिं ॥

पुनरेना निवर्तय पुनरेनान्याकुरु ।
इन्द्र एणानि यच्छ त्वमग्निरेना उपाजतु ॥

पुनरेता निवर्ततामस्मिन् पुष्यन्तु गोपतौ ।
इहैवाग्ने निधारयेह तिष्ठतु यारयिः ॥

यन्नियान न्ययनं सञ्ज्ञानं यत्परायणम् ।
आवर्तन निवर्तनं यो गोपा अपि तं हुवे ॥

य उदानड्व्ययनं य उदानट्परायणम् । आवर्तनं निवर्तनमपि गोपा निवर्तताम् । आनिवर्त निवर्तय पुनर्न इन्द्र गा देहि । जीवाभिर्भुनजावहै । परिवो विश्वतो दध ऊर्जा घृतेन पयसा ये देवाः केच यज्ञियास्ते रय्या संसृजन्तु नः ॥

आनिवर्तनिवर्तय निनिवर्तनिवर्तय । भूम्याश्चतस्रः प्रदिशस्ताभ्यः एना निवर्तय । भद्रं नो अपि वातय मनः । ओं शान्तिश्शान्तिश्शान्तिः इति त्रि । वरुणं यथास्थानं कृत्वा पुण्याह-

जलं पीत्वा कलशं यजमानपत्नीहस्ते आदाय स्त्रीपूर्वा गृहं प्रविश्य दीपं कांस्यपात्रमवलोक्य बन्धु-ज्ञातिभिस्सह भुञ्जीयात् । पत्नी रजस्वला चेत् स्नात्वा कण्ठसूत्रं विसृजेत् ॥

इति दशाहविधिः ॥

## अथैकादशदिनप्रयोगः

### अथैकादशविधिः

एकादशेऽह्नि संप्राप्ते स्नात्वा पुण्याहवाचनम् ।
वृषोत्सर्गं श्राद्धमाद्यं कुर्यात् षोडशश्राद्धकम् ॥

इष्टदेवताभ्यो नमः + ब्राह्मणेभ्यो नमः । तदेव लग्नं + स्मरामि । करिष्यमाणस्य कर्मणः अविघ्नेन परिसमाप्त्यर्थं आदौ विघ्नेश्वरपूजां करिष्य इति संकल्प्य विघ्नेश्वरं संपूज्य वरुणपूजां कृत्वा अनया पूजया वरुणः प्रीयताम् ॥

सर्वेषु कालेषु + सर्वेभ्यो ब्राह्मणेभ्यो नमः । पुण्याहे विशेषः संकल्प्य पुण्यतिथौ प्राचीनावीती अस्मत्पितुः + एकादशेऽहनि नवामैकोद्दिष्ट आमश्राद्धाख्यं कर्म करिष्यमाणः प्रेतस्य प्रेतत्वपैशाचिकबाधानिवृत्तिद्वारा शाश्वतरुद्रलोकावाप्त्यर्थं रुद्रप्रीत्यर्थं वृषोत्सर्जनाख्यं कर्म करिष्यमाणः द्रव्याभावाद्ब्राह्मणाभावादग्नौ महैकोद्दिष्ट आद्यश्राद्धाख्यं कर्म करिष्यमाणः वृषोत्सर्जनाङ्ग आम-श्राद्धाख्यं कर्म करिष्यमाणः तदादौ शुध्यर्थं वृध्यर्थं शान्त्यर्थं अभ्युदयार्थं च एभिर्महाजनैस्सह स्वस्तिपुण्याहवाचनाख्यं कर्म करिष्ये इति संकल्प्य पुण्याह वाचयित्वा वृषोत्सर्जनं कुर्यात् ॥

### अथ वृषभलक्षणम्

लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डरः ।
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते ॥

गोष्ठे चतुष्पथे गृहे वा गोमयेनोपलिप्य अशेषे स्वीकृत्य प्राचीनावीती अस्मत्पितुः + एकादशेऽहनि प्रेतत्वपैशाचिकबाधानिवृत्तिद्वारा शाश्वतरुद्रलोकावाप्त्यर्थं रुद्रप्रीत्यर्थं वृषोत्सर्जनं कर्तुं योग्यतासिद्धिमनुगृहाण योग्यतासिद्धिरस्त्विति ब्राह्मणाः । कर्तुं मुख्यकालो भूत्वा अधिकार-संपदस्त्विति भवन्तो ब्रुवन्तु । कालश्च मुख्यकालोऽस्त्विति भवन्तो ब्रुवन्तु ॥

ओं ओ श्रीगोविन्द + प्राचीनावीती अस्मत्पितुः गोत्रस्य शर्मणः प्रेतस्य + एकादशेऽहनि प्रेतत्वपैशाचिकबाधानिवृत्तिद्वारा शाश्वतरुद्रलोकावाप्त्यर्थं रुद्रप्रीत्यर्थं वृषोत्सर्जनाख्यं कर्म करिष्य-

इति संकल्प्य। तत्काले कृच्छ्राचरणं करिष्य इति संकल्प्य हिरण्यगर्भगर्भस्थं +वृषोत्सर्जनारंभकाले तिथिवारलग्नयोगकरणैः यो दोषस्समजनि तद्दोषपरिहारार्थं प्राजापत्यकृच्छ्रप्रत्याम्नायं यत्किंचिद्धिरण्यं महाविष्णुप्रीतिं कामयमानस्तुभ्यमहं संप्रददे इति दत्वा वत्सतरीसमेत ऋषभं स्नापयित्वा गन्धपुष्पादिभिरलंकृत्य प्राङ्मुख उपविश्य स्थण्डिलोल्लेखनाद्यग्नि प्रतिष्ठाप्य ॥

एह्यग्ने रहुगणपुत्रगौतमोग्निस्त्रिष्टुप् अग्न्याह्वाने विनियोगः। एह्यग्न इह होता निषीदादब्धः सुपुर एता भवानः। अवतां त्वा रोदसी विश्वमिन्वे यजामहे सौमनसाय देवान्। अग्निमावाहयामि ॥

जुष्टो दमूनावसुश्रुतोग्निस्त्रिष्टुप् अग्निर्नमस्कारे विनियोगः ॥

जुष्टोदमूना तिथिर्दुरोण इमन्नो यज्ञमुपयाहि विद्वान्।
विश्वा अग्ने अभियुजो विहत्याशत्रूयतामाभरभोजनानि ॥

चत्वारि शृङ्गा वामदेवो जातवेदाग्निस्त्रिष्टुप् अग्निमूर्तिध्याने विनियोगः। अग्न्याहरणपात्रयोरक्षतैस्सह अप आसिच्य अग्नि प्रज्वाल्य चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य। त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याऽ आविवेश। एष हि देवः प्रदिशोनु सर्वाः पूर्वो हि जातः स उ गर्भे अन्तः स विजायमानस्स जनिष्यमाणः प्रत्यङ्मुखास्तिष्ठति विश्वतो मुख। एह्यग्ने प्राङ्मुखो देव मम अग्ने अभिमुखो भव सुप्रसन्नो भव वरदो भव। भूर्भुवस्सुवः प्रजापतिस्त्रिष्टुप् अग्निप्रतिष्ठापने विनियोगः रेखास्वग्निमभ्यात्मं प्रतिष्ठाप्य ॥

अथान्वाधानम्। अद्यपूर्वोक्तएवंगुणविशेषणविशिष्टायां शुभतिथौ वृषोत्सर्जनाङ्गमन्वाधानं करिष्य इति संकल्प्य अस्मिन्नन्वाहितेग्नावग्नि जातवेदसमिध्मेन प्रजापतिं प्रजापति च आघारदेवते आज्येन अग्नीषोमौ चक्षुषी आज्येन अत्र प्रधानं रुद्रं सोमं इन्द्रं च प्रधानदेवताः चरुपायसयावकद्रव्यैः शेषैः स्विष्टकृतमिध्मसन्नहनेन रुद्रं विश्वान् देवान्संस्रावेणायसमग्नि देवान् विष्णुमग्नि वायुं सूर्यं प्रजापति च प्रायश्चित्तदेवताः आज्येन ज्ञाताज्ञातदोषनिर्हरणार्थं अनाज्ञातत्रयेणाग्निमाज्येन एवं साङ्गेन कर्मणा सद्यो यक्ष्ये भूर्भुवस्सुवः प्रजापतिः प्रजापतिर्बृहती अन्वाधानसमिद्धोमे विनियोगः भूर्भुवस्स्वास्वाहेति सकृदुक्ते एकैकशोग्नावादध्यात्। प्रजापतय इदम् ॥

## अथ रज्जुलक्षणम्

प्रादेशमात्रैष्षट्त्रिंशद्दर्भैः त्रिसन्धि त्रिवृतां सव्योत्तराभ्यां पाणिभ्यां पूर्वमावर्तयेत्। दक्षिणोत्तराभ्यां पश्चादन्ते प्रदक्षिणावृतेन ग्रन्थि कृत्वा। उदगग्रमास्तीर्य प्रादेशमात्रदर्भमुष्टि

छित्वा तस्यां निधाय द्विरावेष्ट्य रज्जुमूलं सकृदावेष्ट्य प्रथमवेष्टनस्याधस्तादुन्नयेत् । एवमेव रज्जुं कृत्वारत्न्यायामं पञ्चदशपलाशमयमिध्मं खादिरादियज्ञीयवृक्षजं वा तया सकृदावेष्ट्य रज्जुमूलं च तावुपरि निदध्यात् । सोदकेन पाणिना प्रदक्षिणमग्निं त्रिः परिसमूह्य उदगग्रैः प्रागग्रैश्च प्रादेशमात्रैः बाहुमात्रैर्वा दर्भैर्दक्षिणत उपरितनैरुत्तरतोधरैरग्निं परिस्तृणीयात् । अग्नेरुत्तरतः पात्रासादनाय दक्षिणतो ब्रह्मासनार्थं च दर्भानास्तीर्य त्रिरग्निं पर्युक्ष्य दर्भेषु द्वन्द्वन्यञ्चि पाणिभ्यामुदगपवर्गं प्राक्संस्थं प्रयुनक्ति चरुस्थाली प्रोक्षणी दर्वीस्रुवौ चमसमाज्यपात्रे इध्माबर्हिषी चेति शूर्प-कृष्णाजिनोलूखलमुसलानि च सादयेत् । प्रोक्षणपात्रमुद्धृत्यानन्तर्गर्भौ प्रादेशमात्रावनखच्छिन्नौ समौ साग्रौ दर्भौ पवित्रार्थं गृहीत्वा तस्मिन्नन्तर्धायाप आसिच्य पवित्राभ्यां तूष्णीं त्रिरुत्पूय पात्राण्युत्ता-नानि कृत्वा इध्मं बर्हिश्च विस्रस्य ताभिरद्भिस्त्रिः प्रोक्षयेत् । अथ चमसं प्रत्यगग्नेर्निधाय पवित्रे अन्तर्धाय उत्पूताप आसिच्य गन्धादिकं प्रक्षिप्य ब्रह्माणं वृणुयात् । अस्मिन्वृषोत्सर्जनहोमकर्मणि ब्रह्माणं त्वां वृणीमहे स वृतोस्मि करिष्यामि । अग्नेः प्रागवस्थाय प्राङ्मुखो यज्ञोपवीत्याचम्य समस्त-पाण्यंगुष्ठाग्रेणाग्नि सव्यपादपुरस्सरं परीत्य निरस्तः परावसुरिति ब्रह्मसदनात्तृणं नैर्ऋत्यां निरस्याप उपस्पृश्य इदमहमर्वाग्वसोस्सदने सीदामि इत्युदङ्मुख उपविश्य बृहस्पतिर्ब्रह्मा ब्रह्मसदन आशिष्यते बृहस्पते यज्ञं गोपाय स यज्ञं पाहि स यज्ञपति पाहि स मां पाहीति वदेत् । कर्ता सपवित्रकराभ्यां चमसमुद्धृत्य ब्रह्मन्नपः[1] प्रणेष्यामीति वदेत् ब्रह्मा ओं भूर्भुवस्सुवः बृहस्पतिप्रसूतः ओं प्रणय कर्ता चमसं नासिकाग्रं नीत्वा उत्तरतोग्नेर्दर्भेषु निधाय दर्भैः प्रच्छादयेत् ॥

अथ प्रत्यगग्नेश्शूर्पे पवित्रे निधाय रुद्राय त्वा जुष्टं निर्वपामि ४ सोमाय त्वा जुष्टं निर्वपामि ४ इंद्राय त्वा जुष्टं निर्वपामि चतुरो व्रीहिमुष्टीन्मंत्रावृत्त्या निरूप्य रुद्राय त्वा जुष्टं प्रोक्षामि सोमाय त्वा जुष्टं प्रोक्षामि इंद्राय त्वा जुष्टं प्रोक्षामि निर्वापसंख्यया प्रोक्षयेत् । निर्वाप-प्रोक्षणादि पृथक् चेत् अग्नेरुत्तरतः प्राग्ग्रीवं ऊर्ध्वलोमं कृष्णाजिनमास्तीर्य तत्रोलूखलं निधाय व्रीहीनोप्य पत्नी स्वयं वा मुसलेनावहन्यात् । तण्डुलान् त्रिष्फलीकृतान् त्रिः प्रक्षाल्य श्रपयेत् । आज्यपात्रे पवित्रे निधाय आज्यमासिच्य अग्नेरुत्तरतः सभस्माङ्गारान् प्रयोगपारिजातरीत्या परिस्तरणाद्बहिर्निरूह्य तेष्वाज्यमधिश्रित्य ज्वलता दर्भाजिनावज्वल्य अंगुष्ठपर्वमात्रके द्वे दर्भाग्रे प्रच्छिद्य प्रक्षाल्य आज्ये प्रास्य तेनैव ज्वलता चरुणा सह त्रिपर्यग्निकरणं कृत्वा तदुल्मुकमपास्यापः स्पृष्ट्वा उदगुद्वास्य अंगारान्प्रत्यूह्य उत्तानाभ्यां पाणिभ्यां असंहते पवित्रे गृहीत्वा सवितुष्ट्वा हिरण्य-स्तूपस्सविता पुर उष्णिक् आज्यस्योत्पवने विनियोगः सवितुष्ट्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण वसोस्सूर्यस्य रश्मिभिः इति प्रागुत्पुनाति सकृन्मन्त्रेण द्विस्तूष्णीं पवित्रे प्रोक्ष्य अग्नौ प्रास्य । अग्नेः पश्चादुदगग्रान्बर्हिस्सन्नहनीमास्तीर्य तत्र आज्यं निधाय दक्षिणेन हस्तेन गृहीत्वा स्रुक्स्रुवौ सहैवाग्नौ प्रताप्य स्रुचं निधाय स्रुवं सव्येन धारयन् । दर्भाग्रैर्बिलं त्रिः प्रदक्षिणं परिमृज्य बिलपृष्ठमग्रत

आरभ्य अभ्यात्मं त्रिस्संमृज्य बिलपृष्ठादारभ्य यावदुपरि बिलं दण्डम् दर्भमूलैस्त्रिस्संमृज्य स्रुवं प्रोक्ष्य प्रताप्य आज्यादुदग्बर्हिष्यासाद्य तैरेवोदकस्पृष्टैर्दर्भैरेवं दर्वीं च संमृज्य स्रुवस्योत्तरतो निधाय दर्भान् प्रोक्ष्याग्नौ प्रहृत्य श्रपन चरुमभिघार्य अग्न्याज्ययोर्मध्ये नीत्वाज्योद्दक्षिणतो बर्हिष्यासाद्य प्रत्यभिघार्य हविरुद्वारणाय चर्वाज्ययोर्मध्ये पात्रान्तरं निधाय पात्रत्रयमभिघार्य अग्निमलंकृत्य स्वयमलंकुर्यात्। विश्वानिन इत्यनयोर्वसुश्रुतोग्निस्त्रिष्टुप् अग्न्यलङ्करणे विनियोगः॥

विश्वानि नो दुर्गहा जातवेदः। सिन्धुन्ननावदुरितातिपर्षि।
अग्ने अत्रिवन्नमसा गृणानः। अस्माकं बोद्ध्य वितातनूनाम्॥

यस्त्वा हृदा कीरिणा मन्यमानः। अमर्त्यं मर्त्यो जोहवीमि।
जातवेदो यशा अस्मासु धेहि। प्रजाभिरग्ने अमृतत्वमश्याम्॥

यस्मै त्वं सुकृते जातवेदः। उलोकमग्ने कृणवस्योनम्।
अश्विनं सपुत्रिणं वीरवन्तं गोमन्तं रयिन्नशते स्वस्ति॥

इध्मरज्जुं चमसे निधाय। इध्मं द्विरभिघार्य इध्ममलकृत्य ब्रह्माणं अलंकृत्य स्वयमलंकुर्यात्। अय त इध्मो वामदेवा जातवेदाग्निस्त्रिष्टुप् वृषोत्सर्जनाङ्ग इध्माधाने विनियोगः। अयं त इध्म आत्मजातवेदस्तेनेध्यस्व वर्धस्व चेद्धवर्धय चास्मान प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा। जातवेदसे अग्नय इदं न मम। वायव्यादाग्नेयान्त मनसा। न स्वाहाकारः। प्रजापतय इदं। चक्षुष्यन्तं हुत्वा दर्व्यामुपस्तीर्य मध्यात्पूर्वार्धात अवदाय पात्रस्थमभिघार्य दर्वीस्थमभिघारयेत्। नाममन्त्रैर्होमः। कद्रुद्राय कण्वो रुद्रो गायत्री वृषोत्सर्जनप्रधानरुद्रप्रीत्यर्थे चरुहोमे विनियोगः॥

कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे। वोचेम शन्तमं हृदे स्वाहा॥ रुद्रायेदम्॥

सोमो धेनुं गौतमस्सोमस्त्रिष्टुप् वृषोत्सर्जनसोमप्रीत्यर्थे पायसहोमे विनियोगः॥ सोमो धेनुं सोमो अर्वन्तमाशुम्। सोमो वीरं कर्मण्यं ददाति। सादन्य विदथ्यं सभेयम्। पितृश्रवणं यो ददाश तस्मै स्वाहा। सोमायेदं। इन्द्रं वो मधुच्छन्दो इन्द्रो गायत्री वृषोत्सर्जनप्रधान इन्द्रप्रीत्यर्थे यावकहोमे विनियोगः॥

इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः। अस्माकमस्तु केवलः स्वाहा। इन्द्रायेदम्। स्विष्टकृतमादाय यदस्य हिरण्यगर्भोग्निस्स्विष्टकृत्त्रिष्टुप् अग्निस्विष्टकृद्धोमे विनियोगः॥

यदस्य कर्मणोत्यरीरिचं यद्वा न्यूनमिहाकरम् ।
अग्निः स्विष्टकृद्विद्वान् सर्वं स्विष्टं सुहुतं करोतु ॥

अग्नये स्विष्टकृते सुहुतहुते सर्वप्रायश्चित्ताहुतीनां कामानां समर्धयित्रे सर्वान्नः कामान्समर्धय स्वाहा । अग्नये स्विष्टकृत इदम् । इध्मबन्धनरज्जुं विस्रस्य प्रोक्ष्य (घृतप्लुतं कृत्वा) पशुपतये रुद्राय स्वाहा पशुपतये रुद्रायेदम् । विश्वेभ्यो देवेभ्यः संस्रावभागेभ्यः स्वाहा । विश्वेभ्यो देवेभ्यः संस्रावभागेभ्य इदम् । अयाश्चाविमदो अयाळग्निः पंक्तिः प्रायश्चित्तार्थमाज्यहोमे विनियोगः ॥

अयाश्चाग्नेस्यनभिशस्तीश्च सत्यमित्वमया असि ।
अयासा वयसा कृतोयासन् हव्यमूहिषे अयानो धेहि भेषजं स्वाहा ॥

अग्नये अयस इदम् ।

अतो देवा मेधातिथिर्गायत्रीर्विष्णुप्रायश्चित्तार्थं आज्यहोमे विनियोगः ॥

अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे । पृथिव्यास्सप्तधामभिः स्वाहा देवेभ्य इदम् ॥

इदं विष्णुर्मेधातिथिर्विष्णुर्गायत्री प्रायश्चित्तार्थमाज्यहोमे विनियोगः ॥

इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूळमस्य पांसुरे स्वाहा ॥ विष्णव इदम् ।

भूरादीनां व्याहृतीनां व्यस्तसमस्तानां विश्वामित्रगौतमात्रेयभरद्वाज ऋषयः अग्निवायुसूर्यप्रजापतयो देवताः गायत्र्युष्णिगनुष्टुप् बृहत्यश्छन्दांसि प्रायश्चित्तार्थमाज्यहोमे विनियोगः । ओं भूः स्वाहा अग्नय इदं न मम । ओंभुवः स्वाहा वायव इदम् ओं सुवः स्वाहा सूर्यायेदं ओं भूर्भुवस्सुवः स्वाहा प्रजापतय इदं (ब्रह्मणस्सप्ताहुतीर्होष्ये छन्दोऋषिवर्जं पूर्ववत्) ब्रह्मा कर्तारं परीत्य । अग्नेः प्रागुदगवस्थाय अयाश्चेत्यादिभिस्सप्ताज्याहुतीर्हुत्वा । उद्देशत्यागान् कर्ता वदेत् ॥

अनाज्ञातमिति द्वयोर्हिरण्यगर्भोनुष्टुप ज्ञाताज्ञातदोषनिर्हरणार्थमाज्यहोमे विनियोगः । अथ मन्त्रौ — अनाज्ञातं यदाज्ञातं यज्ञस्य क्रियते मिथु । अग्ने तदस्य कल्पय । त्वंहि वेत्थ यथातथं स्वाहा । अग्नय इदम् । पुरुषसंमितो यज्ञः यज्ञः पुरुषसंमितः अग्ने तदस्य कल्पय त्वं हि वेत्थ यथातथं स्वाहा अग्नय इदम् यत्पाकत्रात्रितोग्निस्त्रिष्टुप् सर्वाघौघनिर्हरणार्थमाज्य होमे विनियोगः । यत्पाकत्रा मनसा दीनदक्षान । यज्ञस्य मन्वते मर्तासः अग्निष्टद्धोता क्रतुविद्विजानन् । यजिष्ठो देवां ऋतुशो यजाति स्वाहा । अग्नय इदम् । ओंभूस्स्वाहा अग्नय इदम् । ओंभुवस्स्वाहा वायव इदम् । ओं सुवस्स्वाहा सूर्यायेदं ओंभूर्भुवस्सुवस्स्वाहा प्रजापतय इदम् ॥

# ॥ चम्पूरामायणे युद्धकाण्डः ॥

श्री राजचूडामणिदीक्षितप्रणीतः

वामालकावल्लभभावमुद्रासीमाविभागेन्द्रमणीशिलेव ।
रोमावली राजति यस्य मध्ये सोमावतंसस्स सुखाय भूयात् ॥ १ ॥

भव्यारंभाय वो भूयादव्याजकरुणानिधिः ।
सव्यार्धालोकने नम्रा दिव्या या कापि देवता ॥ २ ॥

भोजेन रामचरितं ग्रथितं निशयैकया ।
एकेन पूरयत्यह्ना श्रीचूडामणिदीक्षितः ॥ ३ ॥

अनन्तरमनिन्दितामवनिनन्दनायाः कथां
प्रभञ्जनतनूभुवः प्रभुरसौ समाकर्णयन् ।
कटाक्षरुचिरेखया कलयति स्म धीरोद्धतं
शरासनमतल्लिकां समधिरोपितज्यामिव ॥ ४ ॥

विरोधिपरिमाथिनी हरिवरूथिनी मेदिनी-
सुतादयितसेवनोन्मुखवलीमुखेन्द्रानुगा ।
हृदन्तरनिरन्तराङ्कुरदभंगुराहंक्रिया
चचाल चलवारिधिर्जलधिलङ्घनाशाघना ॥ ५ ॥

क्रीडत्क्रोडेन्द्रघर्घूरवगरिमसखक्ष्वेडिताम्रेडनाति-
त्रस्यत्पञ्चास्यसंसद्द्रुतपरिहृतपर्यन्तदर्यन्तरालम् ।
मुह्यन्तं द्रागसह्याक्रमणरभसतः सह्यमारुह्य शैलं
सेना सा नालिकेरासवरसमपिबत् सह्यजातीरजातम् ॥ ६ ॥

तरङ्गितामोदमनङ्गवीरतुरङ्गमारिष्टतटीकुटीरम् ।
अटीकतारूढहनूमदंसः पटीरशैलं प्रभुरद्भुतं सः ॥ ७ ॥

तदनु च महीमहेन्द्रोऽयमतितुङ्गतरशृङ्गसङ्गतमहेन्द्रपुरं महेन्द्रगिरिमासाद्य विदधे निरवधिमणिशेवधेरुदधेरुपरोधःप्रदेशमनुपरोधमपरदुष्प्रवेशं सेनानिवेशम् ॥

तत्र च

घनतरशङ्खसङ्घनिभभृङ्गमुखप्रसर-
त्सलिलसलीलसिक्तवपुषः पटुरावपुषः ।
चटुलतरङ्गभङ्गविहितप्लवना विहती-
रथ विदधुस्तरामधिपयोधिपयः कपयः ॥ ८ ॥

इयति च समये वियति समं त्रिभिरेकाधिकैर्मन्त्रिभिः भवच्चरणमूलमेव शरणं ममेति कृतोद्घोषणं रावणकृतदुर्भाषणं विभीषणं विलोक्य शङ्काकुलेषु सकलेषु रघुपतिरिदमुदितदय-मवादीत् ॥

स रजोनिधेरवरजोऽस्त्वयं द्विष-
स्त्रिदशारिरेव स दशाननोऽथवा ।
भवतां तथापि भवतां न भीर्भया-
दविताहमस्य भवितास्मि सर्वथा [1] ॥ ९ ॥

तदनु च सदस्यभयमिति वदन्तं रघुकुलककुदमवन्दत चरणारविन्दयोः सदागति-सुतामोदितागतिराशरपतिः ॥

विस्रम्भभाजनतया न परं परन्तु
साम्राज्यदानविधिनापि सहोदरस्य ।
वीरः प्लवङ्गकुलपुङ्गवनिर्विशेषं
दोषाचरेश्वरममुं व्यतनीत्तदानीम् ॥ १० ॥

सेतुं विधातुमनसोत्तरणैकहेतुं
वीरेण विस्तृतकुशास्तरणस्थितेन ।
तिस्रोऽमुनाथ रजनीरनुनीयमानः
त्रिस्रोतसो न भजति स्म पतिः प्रसादम् ॥ ११ ॥

---

१ अत्र मातृका लुप्ता ।

दुरारोपे चापे कलयति रघूणामधिपतौ
ज्वलज्ज्वालामालावलयितशिख मङ्क्षु विशिखम् ।
क्षणादेवोच्छुष्यत्प्रलयजलपूरोऽपि निखिल-
स्रवन्तीनामास्रैः पुनरपि पुपूरे जलनिधिः ॥ १२ ॥

तत्क्षणं च लक्ष्मणाग्रजोदग्रशिलीमुखमुखविसृमरज्वलशिखिशिखाकलाप लीलावलीढ-दुरवलेपः प्रालेयमिलनशीतलमलयजालेयतुलितमेव जलनिधिरकलयत कीलालम् ॥

अन्तःपुरेऽपि विहितागसि वायसे प्रा-
गन्तःपरिस्फुरदपारकृपापयोधिम् ।
विज्ञाय वीरमुदधिर्विततापराधो-
प्युद्धाय जन्हुसुतया शरणं प्रपेदे ॥ १३ ॥

कल्पान्ततल्पमयमीश ! खिलीकृतं चेत्
कालेषु शेषशयन ! क्व शयिष्यसे त्वम् ।
इत्याहितस्तुतिवचस्यमरस्रवन्त्यां
वीरो मरौ जलनिधेर्विदधे तदस्त्रम् ॥ १४ ॥

तदनु नदीनाथोऽपि दीनदीनो विबुधनदीसूतिकासदने विनताखिलजनताहितसंपदि स पदि भगवतः प्रणम्य क्षम्यतामयं माधव ! ममापराधः विधीयतां सेतुः इत्यभिधाय जलधि-रन्तरधात् ॥

अथ दशरथसूनोरंचले चञ्चलेऽक्ष्णो-
रहमहमिकयाद्रीनाहतान्वानरेन्द्रैः ।
नल इह बहु गृह्णन् विक्षिपन् वा न दृष्टः
जलधिपयसि सेतुः केवलं दृश्यते स्म ॥ १५ ॥

पार्श्वद्वयीघटितसप्तगिरित्रिकूटं
किं सेतुदण्डमुदरे विनिधाय गाढम् ।
काकुत्स्थवन्दनविलम्बकृतापराध
वाराकरं विधिरपीडयदात्तघोषम् ॥ १६ ॥

अथ कपिकुललीलालङ्घनालोलसाल-
द्रुमपतितफलालीदन्तुराभ्यन्तरेण ।
विधुरतुलयशश्श्रीकेतुना सेतुनासौ
परिमलदकशैलं प्राप शैलं सुवेलम् ॥ १७ ॥

तदनु च परिज्ञाताभिज्ञान विभीषण श्रवणसमसमय संपति वनौकःपतिततिविधीय-मानविविधोपरोधनिरोधनमदहृदय दाशरथिकृतप्राणधारणाभ्यां प्रत्येकमावेद्यमानान्मानापहसित-वासवानेकपान् वानरानीकपानालोकितुमुत्तुङ्गं प्रासादशृङ्गमारुह्याङ्कणभुवि समुद्रीवं दशग्रीव-मुद्वीक्ष्य सुग्रीवस्तत्क्षणजृम्भमाणमहाग्रहः समुत्प्लुत्य निरुपप्लवमपरमिव त्रिकूटकूटं निशाट-पतिकिरीटमाहरन् लाघवेन राघवनिकटमाटीकत ॥

प्राणा मम प्रणिहितास्तव वीर पाणौ
मा साहसेन सहसाहवसंमुखो भूः ।
इत्यालपन् जयरमासुदृढोपगूढ-
मालिङ्ग्य गाढमधिपो मुमुदे कपीन्द्रम् ॥ १८ ॥

राघवोऽयं महाहवोचितसाहसोपचितैरखिलैरपि हरिबलैररिकुलैकशङ्काकरमुपरुरोध लङ्कापुरम् ॥

लीलाकुलीकृतजगत्स्वथ वीरवाद-
कोलाहलेषु तुमुलेषु हरीश्वराणाम् ।
बन्दीकृतामरनितम्बवतीजनानां
मन्दीबभूवुरकृशाः क्रमशः प्रलापाः ॥ १९ ॥

रणोन्मुखवलीमुखावलिसलीलकोलाहल-
ज्वलच्छ्रवणसंत्वरैरथ रयेण नक्तंचरैः ।
अतानि जयदुन्दुभिः क्षुभितसिन्धुभिर्बन्धुभि-
र्घनस्तनितसंपदां स्तबकितो घनैर्निस्वनैः ॥ २० ॥

तदनु च तुङ्गतरशृङ्गततिभृङ्गहतिभङ्गुररथाङ्गकशताङ्गसङ्कुले खरतरकरास्फालन-स्फुटितमस्तकहास्तिके लीलाचलवालाहतिखेदनिश्वसदश्वीये पादाभिघातसविषादपादाते नखमुख-

विमुखीकृतशिलीमुखे शिलाशकलशकलीकृतातनुतनुत्राणे हठपातितविटपावलिविनिपाटित-तोमरे परिपूरितहरिमुष्टिकमहाट्टहासपरिच्यावितपट्टसे साहङ्कारहुङ्कारविश्लथपरश्वथे गुरुतरभुज-परिघलघुशातितपरिघातने महत्यायोधने शाखाचरनिशाचरयोः प्रतायमाने समराभिमुखवीरा-वधीरण शराशय तारासुतावस्कन्दित स्यन्दन संक्रन्दन शातिसमीरित समीराशनमयास्त्र समुदित -पञ्चत्वरूपवैधुर्य विधूननधुर्य विहङ्गम पुङ्गराभरितमारुतपरिष्वङ्गपुनरंकुरित सङ्गरानुषङ्गेषु प्लवङ्गेषु करतललसमानसानुना पवमानसूनुना कोपाधिततामाक्षे धूम्राक्षे परिक्षिप्ते विपक्षकुलकम्पनेऽप्य-कम्पने सरभसलम्भितालम्भने निखिलभूदेवतान्तके देवान्तके च प्रापितान्तके श्रुतिकटुवचसि त्रिशिरसि च समुद्वर्तितशिरसि निरन्तराकृष्टधनुर्यष्टिकाविसृष्टसायकनिगुम्भै निगुम्भे च परिष्वक्त-रम्भाकुचकुंभे समरारम्भजृम्भमाणजम्भारिविमतभङ्गदेन च अङ्गदेन शताङ्गायोजितशतोष्ट्रे वक्रदंष्ट्रे निष्ठुरमुष्टिपतननिष्पिष्टे तृणीकृतपुरान्तके नरान्तके च सम्प्राप्तकृतान्तपुरान्तिके घोरतरपरिघातन-घातितवैरिसङ्घे प्रजङ्घे चक्राराहति जडीकृतजङ्घे संख्यामुखशूरजनहृदयशूलशीलेन नीलेन च समस्तजगदेकलघुहस्ते प्रहस्ते च निरस्ते निस्तन्द्रकदनादरे महोदरे च विदारितोदरे दरसंग्राम-महाग्रहव्यग्रीकृतेन सुग्रीवेण च दम्भोलिकरसंस्तम्भकदोस्स्तम्भदम्भे कुम्भे च समासादितसुर-वधूकुचपरिरम्भारम्भे दारुणशरनिकरदारितमुदाशररथिना दाशरथिना निशितमुखविशिखचकित-रक्षोधिपासमयसमुद्बोधिते सुग्रीवनखमुखवितीर्णशूर्पणखासाधर्म्यतया सन्ततसमुद्दीर्णशोणि-तार्णःपरिपूर्णनिजाभ्यर्णे कुम्भकर्णे च विदीर्णे जाम्बवदनुनीतहनूमदविलम्बोपनीतमहौषधि-वेधमहिमव्यपोहितपैतामहमहास्त्रविहितमोहानपि महोत्साहान् वानरवीरान् मायामयराघव-दारहननविवदायामवदायासेन मोहयित्वा निकुम्भिलाकुम्भिन्यां निभृतसम्भृतयज्ञसम्भारे जम्भारिवैरिणि अप्यतिकायकायविस्रंसितमांसलमांससंप्रीणितपतत्रिभिस्सुत्रामलोकयात्रापरे समन्ततोऽपि निरन्तरकन्दलमदसुन्दरीजनाक्रन्दरवदन्तुरहरिदन्तरात् अन्तःपुरात् निर्गत्य निसर्गपरुषसांराविणो रावणः आहवभुवमवजगाहे ॥

विंशत्यर्धकठोरकार्मुकहठाकृष्टिस्फुरन्मुष्टिके
वर्षत्याशुगवर्षमाशरपतौ हर्षादमर्षादपि ।
जानीमोऽभिमुखेन लक्ष्यनिहितान् वीरान्वरीतुं हरीन्
पर्याप्ता न बभूवुराहवमुखे स्वर्वारवामभ्रुवः ॥ २१ ॥

समरसमयावकृष्टदशकार्मुकयन्त्रगल-
न्निशितशिलीमुखक्षतवलीमुखसन्ततिकः ।

अधिसमरं क्षणदाचराभिलषितलक्ष्यतया
परमजनिष्ट सोऽयमपरार्धपृषत्कगणः ॥ २२ ॥

तदनु च कथावशेषं शेषमपि हरिबलमवलोक्य रोषणो विभीषणः प्रीणयन् दाशरथि-माशरपतिसारथिमप्रतिरथः प्रतिरथभञ्जदया गदया निर्दयं मर्दयामास ॥

रक्षःपतिस्तदनु शक्तिमकुण्ठशक्ति
चिक्षेप वक्षसि शिलाकठिनेऽनुजस्य ।
मध्ये भवन् विनतवत्सलतैकसीमा
रामानुजो बत मुमोह तयापविद्धः ॥ २३ ॥

आकर्णकृष्टधनुषं दशकण्ठमग्रे
मोहाकुलं च सहजं मुहुरीक्षमाणः ।
कोपेन शोकरभसेन च दुर्निरीक्ष्यो
वीरोऽथ वीरकरुणाविव लक्ष्यते स्म ॥ २४ ॥

सौमित्रिवक्षसि पपात सुरारिशक्तिः
वीरस्य रूढमभवद्धृदि शोकशल्यम् ।
विद्धोऽथ तत्र विभुरेष बभूव चित्र
नीरन्ध्रनिस्सरदमन्दतरास्रदिग्धः ॥ २५ ॥

अवलम्ब्य धैर्यमवधीर्य हीनतां विभुना कृतिप्रतिकृतं चिकीर्षुणा ।
विबुधाहितं युधि शरैर्विमोहितं विदधेऽपनीतमपरत्र सारथिः ॥ २६ ॥

जिघ्रन्नोषधिमञ्जनासुतसमानीतामसौ लक्ष्मणो
यावज्जीवति यावदेव च विभुर्गाढं तमालिङ्गति ।
तावत्पंक्तिमुखः क्षणाद्रणमुखे विस्फारितज्यालता-
टङ्कारिध्वनिधिक्कृतार्णवरवस्थेमाऽवतस्थे तदा ॥ २७ ॥

दशस्यन्दननन्दनोऽपि मातलिसमानीतं संक्रन्दनस्यन्दनमलंकुर्वन्नहंकुर्वदभियातगर्व-निर्वापणोद्दण्डं कुण्डलयति स्म कोदण्डम् ॥

आकर्णं परिकृष्य कार्मुकमसावह्नाय रक्षःपते-
रम्भोजासनशासनेन कवचं दुर्भेदमालोचयन् ।
आयुष्याक्षरपङ्क्तिकामिव मृजन्नास्यालिकाभ्यन्तरे
दम्भोलिप्रतिमानमार्गणगणानापातयत्तत्क्षणात् ॥ २८ ॥

तदनु च तत्तादृशानां विभीषणोपदेशानामनुस्मरन्नन्तःपरिणमद्दुर्दिनादीनमुखो दशमुखो भृशमखिद्यत। तत्क्षणेन च कथञ्चिदवलम्ब्य धैर्यं कालविपर्ययार्थमेव रोषोषर्बुधेन प्रज्वलन्नस्त्रप्रत्यस्त्रप्रयोगवित्रस्तसमस्तभुवन प्रस्तावयति स्म विस्तारकमतिदारुणमनन्व-योदाहरणं रणम् ॥

अम्भोधेरिव बुद्बुदावलिरहोधारामुचापांमुचा
सन्नद्धेन रघूद्वहेन शतशो नाराचधाराकिरा ।
अधोंदित्वरनिष्ठुरोक्तिरसकृत् कृत्तापि तत्तादृशी
सद्यो हन्त समुद्ययौ दशमुखी क्रव्यात्प्रभोरक्रमात् ॥ २९ ॥

तदनु च वैरिवधाय विबुधाधिपसारथिबोधितो दाशरथिः सन्धाय वैधात्रमस्त्रं निर्जरारेरुरसि ससर्ज ॥

दम्भोलिर्भवति स्म यत्र भिदुरो जम्भारिमुक्तः स्वयं
चक्रं न क्रमते स्म वित्रुटदरं त्रैविक्रमं यत्र च ।
क्षिप्रं वक्षसि रक्षसामधिपतेरस्मिन्विधेःप्रापतत्
अस्त्रं सोप्यवनावमुष्य च शिरःश्रेणीषु गृध्रावली ॥ ३० ॥

पुनरुज्जीवनाशङ्कातरलं दिविषद्बलम् ।
हतेऽपि रावणे नैव क्षणं पुष्पाण्यवाकिरत् ॥ ३१ ॥

कचभरनहनं पुलोमजायाः कतिचिदहान्यपगर्भकं यथा स्यात् ।
विभुशिरसि तथा सुधाशनास्स्वस्तरुकुसुमान्यथ हर्षतोऽभ्यवर्षन् ॥ ३२ ॥

तदनु चोपश्रुत्य पत्युर्मृत्युमाकुलमतिरमन्दोदितशोकभरा मन्दोदरी शातोदरी जनशतपरीता नयनयुगलगलदविरताविरलाम्बुर्विललाप ॥

नक्तंचरेन्द्र बहुधा वसुधासुताया नक्तंदिवं विदधतो भवतोऽनुरागम् ।
युक्तं किमेवमवनीं जननीममुष्या व्यक्तं विधाय शयितुं सुदृढोपगूढाम् ॥ ३३ ॥

स्वर्वन्दीजनधूतचामरमरुत्पोतापनीतश्रम-
 स्तल्पे कल्पकपुष्पकल्पितमहाशिल्पे शयानः पुरा ।
रक्षोनाथ कथं नु गृध्रपटलीपक्षानिलावीजितः
 शेषे कीशचयाविमुक्तपरुषग्रावाकुले भूतले ॥ ३४ ॥

विद्धो दशास्यो विशिखैर्ममेति गर्वायसे राघव किं वृथैव ।
चित्ते वसत्येव ममैष तत्ते मामप्यभित्वा कथमिष्टसिद्धिः ॥ ३५ ॥

इति बहुवारं कुररीमिव चिरमविरतं विलप्य तदनु च चैतन्यापह वेदनावतीं प्रजावतीमाश्वासयन् विश्वाधिकदयानिधेर्दाशरथेरनुज्ञया विज्ञानभूषणो विभीषणो निखिलमपि समग्रमग्रजन्मनः कर्तव्यं कर्म निर्वर्तयन् तत्कालप्रवर्तितप्रशस्तालङ्कारं प्रविश्य लङ्कापुरं तत्क्षणं लक्ष्मणावर्तितराज्याभिषेकस्सविशेषविनीतवेषः पुनरपि समाजमाजगाम ॥

पूर्वप्रतिश्रुतपुलस्त्यजसूनुराज्यसाम्राज्यदानमुदितेन विभीषणेन ।
कोटीरकोटिकुसुमार्चितपादमूलो मेने विभुस्स्वमृणतो महतो विमुक्तम् ॥ ३६ ॥

ततश्च ॥

द्विषा रुद्धामिद्धानिलसखविशुद्धां प्रियतमां
 विधायाङ्के पङ्केरुहदृशमशङ्केन मनसा ।
विमानं कौबेरं वियति वलमानं सफलयन्
 कपिव्रातोपेतो नगरमुपायतो रघुपतिः ॥ ३७ ॥

संश्लिष्यन् भरतं पदाग्रविनतं शत्रुघ्नमप्यादरात्
 मातॄणामविशेषतः सविनयं मौलौ वितन्वन् पदे।
सर्वानप्यनुरञ्जयन्पुरजनान् साम्राज्यसिंहासने
 वीरोऽसौ विहिताभिषेचनविधिर्विश्वं ररक्षाऽक्षतम् ॥ ३८ ॥

इति श्रीदन्तिद्योति दिवाप्रतीपाङ्क सत्यमङ्गल रत्नखेट श्रीनिवासदीक्षिततनयस्य कामाक्षीगर्भसंभवस्य श्रीमदर्धनारीश्वरगुरुचरणसहजतालब्धविद्यावैशद्यस्य श्रीराजचूडामणिदीक्षितस्य कृतिषु एकदिवससंदृब्धो युद्धकाण्डचम्पूः संपूर्णः ।

हरिः ओं । शिवाय नमः । त्रिपुरसुन्दर्यै नमः ॥

सू— अइसे द्वारपाल आये बनबीच लोक दूरकर सो बात उत्तरदेशाधीश कन्या सोक हासोस्रन श्रिंगार बनकूं सरससिखामणि आवते देखो ॥

दरुवु— सरससिखामणि कन्या आवें देखो ।
चद्राकीसो मुखोनीको
हसकसी चलचाले सोला श्रिंगारकीय्ये
माथेमृगमद तिलकादिये
मनभावन रूपमोहे ॥ २ ॥
चपकानासिका साहै
अधरा रंग लाल बनियावे
मोतीने मंगभारे ॥ ३ ॥

सू— अइसे आये उत्तरदेशाधीश कन्या सरससिखामणि श्रिंगार बनबीच आछेठोर बैठे। अपने सखीसूं बातुकरें देखो ॥

दरुवु— विरह सतावें मोहे चनचन माइ ।
उनबिन मोहे कलन परत हे ॥
कसे रहों निसभासर हो माइ ॥ १ ॥
तन तपता हे उनके मिल बेकूं।
नैन पेशेदके डर सखेसखी ॥ २ ॥
ध्यान न जानो मंत्र न जानो
जानो उनहीको नवो सखी ।
संपद सुखानंद वेहि दिनो हर
वाह कि गतावे जाने दे सखी ॥ ३ ॥

सू— बहार बिरह अभिनये देखो ।

दरुवु— भावरी बाईहो सखि रे मै ।
जपते देखो नंदनंदन ॥
तपते तन मन भूलगई हो ॥ १ ॥

उन बिन पल चन कल न परतहे ।
निसदिन धीर कैसे धरो हे ॥ २ ॥

कब मोहे मिलेंगे प्रभु आकर ।
पलख न सो पग जारबाल गयीहो ॥ ३ ॥

सू — 　एवं उत्तरदेशाधीश्वरकन्यका आगतानंतरकथा कथमित्युक्ते । कालिन्दीतटवन विहारार्थं गोपालसहितः श्रीकृष्णः आगच्छतीति वक्तुं कञ्चुकी समायाति ॥

दरुवु — 　कञ्चुकी समेति अधुना-त्रि
कङ्कणकरशोभित कण्टहारधारी
पङ्कजाक्ष गमनं वक्तु पथिकजनान् निवारयितुम् ॥

सू — 　एवं कञ्चुकी समागत्य शृङ्गारवनस्थान् जनान्निजोद्योगे तत्परान् कृत्वा इमं वृत्तांतं कृष्णाय वक्तु गतः तन्मुखात्सर्वं श्रुत्वा वनं परिष्कृतं श्रीकृष्णः समायाति। पश्यंतु सभासदः ॥

दरुवु — 　नन्दनन्दन स्समेति – अत्र समाजम् ।
नन्दनन्दन स्समेति ॥
नन्दनन्दनस्समेति नन्दिताखिलजनः ।
मन्दारधरो नवमनोहरो ॥
तध्धिमितध्धि तकणंकिटतक ।
तध्धोंकिटतक धळांगुबध्धिमि ॥
दिधिमिधिमिकिट तरिकिट(त)झनु ।
धिगणांगुतक धळांगु(तो)मिति ॥
मकरकुण्डलकर्णो मञ्जुळमेघवर्णो
विकचजलजनेत्रो विमलचरित्रो-
तकतकतधिंधिमि तरिकिटतक ।
धणत [1]झणुत तक धळांगुत धिमित ॥

---

१. झनण ।

तकणंकिटतरि धळांगुधिमिकिट ।
तकधळांगुतक धळांगु(तो)मिति ॥
जगद्वनलोलो स्वर्णमयसुचेलो ।
निगमांतवेद्यशीलो निरुपमगोपालो॥
जगजगतधिधिमि तरिकिटतकझं
तारिक(कु)तारि तकझनु।
तकतकधिधिमिकिटतरिकिटझनु
तधेकिटतक धळांगु(तो)मिति ॥

सू — एवं नन्दनन्दनो वेणुनाथप्रियः आगत्य कालिंदीतटवननिकुञ्जरम्यप्रदेशे आप्तगोपालसहितः सरससल्लापं कृत्वा स्थितः अनंतरकथा कथमित्युक्ते पूर्वं राजसूय-यागे अस्मन्मानसपश्यतोहरः अयमिति बुद्ध्वा देवानुकूल्येन इदानीं दृष्टिगोचरत्वेन संप्राप्तः। अनेन कृत्वा अतिसंतोषस्समजनीति सर्वाः कन्यकाः सानंन्दं नाटयंति तासां मध्ये द्राविडदेशाधीश्वरकन्यका कांतिमती कृष्ण दृष्ट्वा विरहातुरासती विरह-मभिनयति पश्यंतु सभासदः ॥

सफलमानेन् जन्मसपलमाने (न्) ।
इमराजवरदनै इन्ड् नान् कण्डु ॥
मेकं कण्ड मइल् पोल्
मित्रनै कण्ड तामरै पोल् ।
मोक्षमानेनवने मुनुवन्ददिनाल् ॥ १ ॥

धान्यंकंड याचकंपोल्
[1]द्रव्यंकण्ड धनाशुरन् पोल्
भूतलेशनै कण्ड भूजनंगळ् पोल्
मदिकण्ड कुमुदं पोल्
मावै कण्ड कोकिलं पोल्
मदिमुकनै नान् कण्डु मनदु संतोषमाय् ॥

१. द्रव्यं कंड धनशुरं बोल् ।

காந்திமதி-தருவு சபலமானேன் ஜன்ம சபலமானேன்
இபராசவரதனை இன்று நான கண்டு
மேகம கணட மயில் போல்
மித்திரனை கண்ட தாமரை போல்
மோகமானேனவனே முன்வந்ததினல்
தானயம கண்ட யாசகன போல
திரவியம கணட தனுசுரன போல
பூதலேசனை கண்ட பூசனங்கள் போல்
மதி கணட குமுதம போல்
மாவைக கண்ட கோகிலம போல்
மதி முகனை நான் கணடு மனது சந்தோஷமாய்

सू — औरा ईविधंबुन द्राविडदेशाधीश्वरुनि कन्यक कांतिमति विरहंबभिनंयिंचे वृत्तांतमु कटिकवानि मुखांतरंगा विनि ता मरुलुकोन्न कृष्णुनिपैनि मोहपड कारणमेमि यनि सवतिमत्सरमु ताळलेक अरव कन्यनु जूचि तेलुगु कन्य(क) पलिके मार्गंबु पराकु ॥

दरुवु — मरुलुकोन्न कारणमेमे अरवपडुच
वरुसनेमरुलुकोन्न वानिपै वेरवुलेक ॥ १ ॥

कनुल जूचिन मोदलु कनुलान नाविभुडायनु
कनुल जूडनु मेरगादु पोवे वेरिंदान ॥ २ ॥

ना मनसु कोरिनपुडे नाविभुडुवाडायनु
भाम! ऊरिवारिसोम्मु भाविंप नीकु वगगादे ॥ ३ ॥

नन्दनन्दनुनि नवनीतचोरुनि
पोंदु गोरिनपुडे नापुरुषुडे नीकु सिग्गुलेक ॥ ४ ॥

सू — इन्द पडिक्कि कलानिधि शोन्न वार्तैयैक्केट्टु कांदिमदि शोल्किर मार्गम् ॥

दरुवु —

कांतिमदि — कण्डुमोहित्तदिरुवरुवक्कुं सरिकोण्डवनेन्दृनी शण्डैक्कु वाराय् ।

कलानिधि — शण्डे यनि नीवु सरिमाटलाडेवु सहिंचुदुमट्टुन नुण्डवे ॥

कांति — मट्टु मिञ्जिन नीली! नी यिप्पोमरियादै इल्लामल् किट्टुरायेण्डि ।

कला — किट्टुरायनि यडिगेवेमे निन्नु कोट्टुदु तिट्टुदु मोट्टुदु पोवे ॥

कांति — पोवेन्डु शोल्लादे पल्लैतकैक्कुरेन् पुत्तियिल्लाद पावे! नी पोडी

कला — पावे! यनकवे नीवु नन्नु पापजाति अरुवतोत्त!

कांति — तोत्तागैनाले नी एन्मुन् तोत्तुपोनायडि तत्तै!

कला — तत्तै! यनकवे मोत्तबोय्येनु तगवुगादु गुट्टुन नुडवे

कांति — उण्डवे! एन्किराय् एन्नै नी एण्डी उनक्केन्न नादन् स्वंदमुण्डोडी

कला — उण्डोडी! यनियडिगेवेमे उन्नट्लायनि येचुकोवे ॥

சூத்திர: இந்தப்படிக்கு கலாநிதி சொனன வாாத்தை (யைக) கேட்டு காநதிமதி சொலகிற மாாகம:—

காந்திமதி கண்டு மோகித்ததிருவருககும சரிகொண்டவனென்று நீ சண்டைக்கு வாராய்.

கலாநிதி: சண்டை! யனி நீவு ஸரிமாடலாடேவு ஸஹிஞ்சுது மட்டுன நுணடவே!

காந்தி: மட்டு மிஞ்சின நீலினீ யிப்போ மரியாதை யில்லாமல கிடடு ராயேண்டி

கலா: கிட்டு ராயனி! யடிகேவேமே நின்னு கொட்டுது திடடுது மொட்டுது போவே!

காந்தி: போ! வென்று சொல்லாதே பல்லைத் தகைக்குறேன் புத்தி யிலலாத பாவே! நீ போடீ!

கலா: பாவே! யனகவே நீவு நன்னு பாபஜாதி அருவதொத்த!

காந்தி: தொத்தாகை(யி)லே நீ என்முன் தொத்து போனுயடி தததை!

கலா: தத்தை! யனகவே மொத்தபொய்யேனு தகவுகாது குட்டுன நுண்டவே!

காந்தி: உண்டவே! என்கிருய் எனனை நீ ஏண்டீ உனக்கென்ன நாதன் சுவந்த முண்டோடீ!

கலா: உண்டோடீ! யனி யடிகேவேமே உன்னட்லாயனி யெஞ்சுகோவே!

